कार्योत्पत्तौ तदन्यप्रकृतिकल्पनावैयर्थ्याच्च च। प्रकृतेर्गुणा इत्यादिवाक्यं तु वनस्य वृक्षा इतिवद् बोध्यम्।

सत्त्वं रजस्तम इति प्रकृतेरभवन् गुणाः।

इति सत्त्वादीनां प्रकृतिकार्यत्ववचनं तु गुणनित्यतावाक्यविरोधेन महत्तत्त्वकारणीभूतकार्यसत्त्वादिपरमेव। महदादिसृष्टिर्हि गुणवैषम्यात् श्रूयते। तच्च च वैषम्यं सजातीयसवलनेन गुणान्तरव्यावृत्तप्रकाशादिफलोपहितः सत्त्वादिव्यवहारयोग्यः परिणाम इति। एतेनाऽष्टाविंशतितत्त्वपक्षोऽप्युपपादितो मन्तव्यः। वैषम्य एव सत्त्वादिव्यवहारस्य श्रुतौ दृश्यते। यथा तम एवेदमग्र आस तत्परेणेरितं विषमत्वं प्रयात्येतद् वै रजसो रूपं तद्रजः खल्वीरितं विषमत्वं प्रयात्येतद् वै सत्त्वस्य रूपमिति। सत्त्वादित्रयं च सुखप्रकाशलाघवप्रसादादिगुणवत्तया संयोगविभागादिमत्तयाऽनाश्रितत्वोपादानत्वादिना च द्रव्यत्वेऽपि पुरुषोपकरणत्वात् पुरुषबन्धकत्वाच्च च गुणशब्देनोच्यते। इन्द्रियादिवत्। गुणानां सुखदुःखमोहात्मकत्वप्रवादस्तु धर्मधर्म्यभेदात्। मनसः सङ्कल्पात्मकत्ववत्। तत्र सत्त्वं सुखप्रसादप्रकाशाद्यनेकधर्मकं प्राधान्यतस्तु सुखात्मकमुच्यते। एवं रजोऽपि दुःखकालुष्यप्रवृत्त्याद्यनेकधर्मकं प्राधान्यतस्तु दुःखात्मकमुच्यते। तथा तमोऽपि मोहावरणस्तम्भनाद्यनेकधर्मकं प्राधान्यतस्तु मोहात्मकमुच्यते। त एव धर्मास्तेषां लक्षणानि भवन्ति। सत्त्वादिसञ्ज्ञा चाऽन्वर्था। सतो भावः सत्त्वमुत्तमत्वमिति व्युत्पत्त्या

हि धर्मप्राधान्येनोत्तमं पुरुषोपकरणं सत्त्वशब्दार्थः। मध्यमं च रजःशब्दार्थो रागयोगात्। अधमं च तमःशब्दार्थः। अधर्मावरणयोगात्। तानि च सत्त्वादीनि प्रत्येकमसङ्ख्यव्यक्तयः। लघुत्वादिधर्मैरन्योन्यसाधर्म्यं वैधर्म्यं च गुणानामिति साङ्ख्यसूत्रात्। अत्र हि सूत्रे लघुत्वादिना बहूनां सत्त्वानां साधर्म्यं तेनैव रजस्तमोभ्यां वैधर्म्यम्। एवं चलत्वादिना गुरुत्वादिना च बहूनां रजसां बहूनां च तमसां तदुभयमुक्तमिति। किञ्च यदि सत्त्वादित्रयमेकैकव्यक्तिरेव स्यात् तत् त्रयं विभ्वेव वक्तव्यम्। एकदाऽनेकब्रह्माण्डादिसृष्टिश्रवणात्। तथा च कार्याणामनन्तवैचित्र्यं न घटते। न च संयोगवैचित्र्याद् वैचित्र्यं स्यादिति वाच्यम्। विभूनां त्रयाणां गुणानां स्वतः संयोगवैचित्र्यासम्भवात्। द्रव्यान्तरस्य चाऽवच्छेदकीभूतस्याऽभावादिति। तस्मात् सत्त्वादीन्यसङ्ख्यव्यक्तिकान्येव द्रव्याणि। तेषु त्रित्ववचनं तु सत्त्वत्वादिविभाजकोपाधित्रयेण वैशेषिकाणां नवद्रव्यवचनवदिति सिद्धम्। तानि च सत्त्वादीनि यथायोग्यमणुविभुपरिमाणकानि। अन्यथा रजसश्चलस्वभावत्ववचनविरोधात्। आकाशकारणत्वस्य च विभुत्वौचित्यात्। सर्वेषां कारणद्रव्याणां विभुत्वे कार्याणां परिच्छिन्नत्वानुपपत्तेश्च। नन्वेवं वैशेषिकोक्तान्येव पार्थिवाण्वादीनि प्रकृतिरित्यायातमिति चेन् न। गन्धादिगुणशून्यत्वेन कारणद्रव्येषु पृथिवीत्वाद्यभावतोऽस्माकं विशेषात्। तदुक्तं विष्णुपुराणादिषु॥

अव्यक्तं कारणं यत् तत् प्रधानमृषिसत्तमैः।

प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम्॥
शब्दस्पर्शविहीनं तद् रूपादिभिरसंयुतम्।
त्रिगुणं तज् जगद्योनिरनादिप्रभवाप्ययम्॥

इत्यादिना।

वैशेषिकाणां कारणद्रव्येषु गन्धाद्यनुमानं तु भाष्येऽस्माभिर्निराकृतम्। अथैवमपि प्रकृतेरणुविभुसाधारणसत्त्वाद्यनेकव्यक्तिरूपत्वेऽपरिच्छिन्नत्वैकत्वाक्रियत्वसिद्धान्तक्षतिरिति मैवम्। कारणद्रव्यत्वरूपप्रकृतित्वेनैवाऽपरिच्छिन्नत्ववचनात्। गन्धत्वेन गन्धानां पृथिवीव्यापकतावत्। आकाशादिप्रकृतीनां विभुत्वेनैव प्रकृतिविभुत्वसिद्धान्तोपपत्तेश्च। तथा पुरुषभेदेन सर्गभेदेन च भेदाभावस्यैवैकशब्दार्थत्वात्। अजामेकामिति श्रुतितस्तथाऽवगमात्। अथाऽध्यवसायाभिमानादिक्रियाराहित्यस्यैवाऽक्रियशब्दार्थत्वात्। अन्यथा श्रुतिस्मृतिपूक्तस्य प्रकृतिक्षोभस्याऽनुपपत्तेरिति। प्रकृतिगताश्चाऽपरे विशेषा भाष्ये द्रष्टव्याः। प्रकृत्यनुमानं चेदम्। सुखदुःखमोहात्मकं महदादिकार्यं सुखदुःखमोहात्मकद्रव्यकार्यं सुखदुःखमोहात्मकत्वात् वस्त्रादिकार्यशय्यादिवदिति। श्रुतिस्मृती चाऽत्राऽनुग्राहकस्तर्कः। एवं सामान्यतोऽनुमितायाः प्रकृतेर्विशेषाः शास्त्राद् योगाच् चाऽवगन्तव्याः। अनुमानस्य सामान्यमात्रविषयकत्वात्। नन्वन्तरेव सुखादिकमुपलभ्यते बाह्यवस्तुषु सुखादौ किं प्रमाणं येन दृष्टान्तता स्यादिति। उच्यते। अन्तःकरणस्य सुखादिहेतुतया विषयेषु सुखादिकं सिध्यति। न च रूपादिगतोत्तमत्वादिकमेव

सुखाद्युत्पादने नियामकम्। उत्तमत्वादेर्जातिरूपत्वे नीलत्व-पीतत्वादिना जातिसाङ्कर्यापत्तेः। कालादिभेदैरेकस्या एव रूपव्यक्तेः सुखदुःखोत्पादकत्वाच्च च। अतः सुखादिमत्त्वमेवोत्तमत्वादिकम्। किञ्च घटरूपमिति प्रत्ययवत् स्त्रीसुखं चन्दनसुखमित्यादिप्रत्ययादपि विषये सुखाद्युचितम्। अधिकं तु भाष्ये द्रष्टव्यम्। तदेवं प्रकृतिर्निरूपिता। महत्तत्त्वं निरूप्यते। प्रकृतेः सकाशाद् बुद्ध्याख्यं महत्तत्वं जायते। तस्य धर्मादिरूपप्रकृष्टगुणयोगान् महत्सञ्ज्ञा तदेव च लक्षणम्। महान् बुद्धिः प्रज्ञेत्यादयश्च तस्य पर्यायाः। तथा चोक्तमनुगीतायाम्।

महानात्मा मतिर्विष्णुर्जिष्णुः शम्भुश्च वीर्यवान्।
बुद्धिः प्रज्ञोपलब्धिश्च तथा ब्रह्मा धृतिः स्मृतिः॥
पर्यायवाचकैरेतैर्महानात्मा निगद्यते।
सर्वतः पाणिपादश्च सर्वतोऽक्षिशिरोमुखः॥
सर्वतः श्रुतिमाल्ँ लोके सर्वं व्याप्य स तिष्ठति।
अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः॥
ज्ञानवन्तश्च ये केचिदलुब्धा जितमन्यवः।
विमुक्ताः सर्व एवैते महत्त्वमुपयान्त्युत॥
विष्णुरेवाऽऽदिसर्गेषु स्वयम्भूर्भवति प्रभुः॥

इति। अत्र सत्त्वाद्यंशत्रयेण महतो देवतात्रयोपाधित्वात् तदविवेकेन ब्रह्मविष्णुशिवत्ववचनम्। तदुक्तं विष्णौ।

सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्।

इति। मात्स्ये च।

सविकारात् प्रधानात् तु महत्तत्त्वमजायत।
महानिति यतः ख्यातिर्लोकानां जायते सदा॥
गुणेभ्यः क्षोभ्यमाणेभ्यस्त्रयो देवा विजज्ञिरे।
एका मूर्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः॥

इति। अणिमेत्यादिभावनिर्देशो धर्माधर्मभेदात्। ब्रह्मशङ्करापेक्षयाऽप्यादौ विष्णुरूपेणैव महानाविर्भवतीति विष्णुरेवेत्यर्धेनोक्तम्। इदमेव महत्तत्त्वमंशतो रजस्तमःसम्भेदेन परिणतं सद् व्यष्टिजीवानामुपाधिरधर्मादियुक्तं क्षुद्रमपि भवति। महदुपरागाद् विपरीतमिति साङ्ख्यसूत्रात्। महत्तत्त्वस्य प्राधान्येनाऽसाधारण्येन चाऽध्यवसायो वृत्तिः। महदहङ्कारमनस्त्रितयात्मकस्यान्तःकरणस्य महत्तत्वं बीजावस्थेति। अत्र प्रकृतेर्महान् महतोऽहङ्कार इत्यादिसृष्टिक्रमे शास्त्रमेव प्रमाणम्। अनुमानेन सामान्यतः कार्याणां सकारणकत्वमात्रसिद्धेः न तु सृष्टौ भूतादिक्रमो वाऽन्तःकरणादिक्रमो वेत्येकतरावधारकमनुमानं सम्भवति। स्पष्टलिङ्गाभावात्। श्रुतिस्मृत्यनुगृहीतं यथाकथञ्चित् लिङ्गं तु महदादिक्रमेऽस्तीति भाष्येऽस्माभिः प्रदर्शितम्। महत्तत्त्वं निरूपितम्। अहङ्कारो निरूप्यते। महत्तत्त्वादहङ्कार उत्पद्यते। अङ्कुरात् शाखावत्। तस्य चाऽभिमानवृत्तिकत्वादहङ्कारसञ्ज्ञा। कुम्भकारसञ्ज्ञावत्। तदेव लक्षणम्। तस्य च पर्यायाः कौर्मे प्रोक्ताः।

अहङ्कारोऽभिमानश्च कर्ता मन्ता च संस्मृतः।
आत्मा च प्रकुलो जीवो यतः सर्वाः प्रवृत्तयः॥

इति। स चाऽहङ्कारस्त्रिविधतया त्रिविधकार्यहेतुः। तदुक्तं कौर्म।

वैकारिकस्तैजसश्च भूतादिश्चैव तामसः।
त्रिविधोऽयमहङ्कारो महतः सम्बभूव ह॥
तैजसादिन्द्रियाणि स्युर्देवा वैकारिकाद् दश।
एकादशं मनश्चाऽत्र स्वगुणेनोभयात्मकम्॥
भूततन्मात्रसर्गस्तु भूतादेरभवन् प्रजाः।

इति। वैकारिकः सात्त्विकः। तैजसो राजसः। स्वगुणेनेन्द्रियवृत्तिषु साहाय्यरूपेणोत्कर्षेण। उभयात्मकं ज्ञानकर्मोभयेन्द्रियात्मकम्। अन्यत्रमना अभूवं नाऽश्रौषमित्यादिश्रुत्या मनसो ज्ञानकर्मोभयेन्द्रियसहकारित्वसिद्धेरिति। एकादशेन्द्रियदेवाश्च।

दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमित्रकाः।
चन्द्रश्च

इति। अहङ्कारो निरूपितः। इन्द्रियादीनि निरूप्यन्ते। अहङ्कारादादौ मन उत्पद्यते।

शब्दरागाच्छ्रोत्रमस्य जायते भावितात्मनः।
रूपरागात् तथा चक्षुर्घ्राणं गन्धजिघृक्षया॥

इत्यादिना मोक्षधर्मादाविन्द्रियादीनां मनोवृत्तिरागादिकार्यत्वश्रवणात्। ततश्चाऽहङ्कारात् सङ्कल्पपूर्वकं दशेन्द्रियाणि पञ्चतन्मात्राणि चोत्पद्यन्ते। इन्द्रियतन्मात्रयोश्च कार्यकारणभावस्याऽभावात् क्रमनियमो नाऽस्ति। तत्रेन्द्रियेषु ना-

ऽस्त्यवान्तरकार्यकारणभावः प्रमाणाभावात्। तन्मात्रेषु त्वस्ति। स यथा। शब्दतन्मात्राद् वक्ष्यमाणक्रमेण स्पर्शतन्मात्रं शब्दस्पर्शोभयगुणकमेवं क्रमेणैकैकगुणवृद्ध्या परतन्मात्रत्रयं पूर्वपूर्वतन्मात्रेभ्य उत्पद्यते पातञ्जलभाष्ये तन्मात्रेषु क्रमेणैकैकगुणवृद्धिवचनात्। ततश्च पञ्चतन्मात्रेभ्यः पञ्चभूतानि जायन्ते। तत्राऽहङ्कारात् पञ्चतन्मात्राणां तद्द्वारा भूतानां चोत्पत्तौ क्रमः कूर्मविष्णवादिपुराणेषूक्तः। यथा कूर्मे।

> भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्ज ह।
> आकाशं सुषिरं तस्मादुत्पन्नं शब्दलक्षणम्॥
> आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह।
> वायुरुत्पद्यते तस्मात् तस्य स्पर्शो गुणो मतः॥

इत्यादिक्रमेणेति। नन्वेवमाकाशादिभूतचतुष्टयस्याऽपि तत्त्वान्तरारम्भकत्वेन प्रकृतित्वापत्त्या केवलविकृतित्वसिद्धान्तक्षतिरिति चेन् न। आकाशादीनां स्पर्शादितन्मात्रेष्वहङ्कारोपष्टम्भमात्रेण कारणत्वस्य पुराणेषूक्तत्वादिति। तदेवं त्रयोविंशतितत्त्वानामुत्पत्तिरुक्ता। तत्र पञ्चभूतानि वर्जयित्वाऽहङ्कारं च बुद्धौ प्रवेश्य सप्तदशकं लिङ्गशरीरसञ्ज्ञं भवति वह्नेरिन्धनवदात्मनोऽभिव्यक्तिस्थानत्वात्। तच् च सर्वपुरुषाणां सर्गादावुत्पद्य प्राकृतप्रलयपर्यन्तं तिष्ठति। तेनैव चेहलोकपरलोकयोः संसरणं जीवानां भवति। प्राणश्च बुद्धेरेव वृत्तिभेद इत्यतो न लिङ्गशरीरात् पृथङ् निर्दिश्यते। तस्य लिङ्गशरीरस्य सूक्ष्माणि पञ्चभूतान्याश्रयश्चित्रादिवदाश्रयं विना

परमसूक्ष्मस्य लोकान्तरगमनासम्भवात्। इदं च लिङ्गशरीरमादौ स्वयम्भुव उपाधिभूतमेकमेव जायते। तस्यैव विराडाख्यवक्ष्यमाणस्थूलशरीरवत्। ततश्च व्यष्टिजीवानामुपाधिभूतानि व्यष्टिलिङ्गशरीराणि तदंशभूतानि ततो विभज्यन्ते। पितुर्लिङ्गशरीरात् पुत्रलिङ्गशरीरवत्। तदुक्तं सूत्रकारेण। व्यक्तिभेदः कर्मविशेषादिति। मनुनाऽप्युक्तम्।

तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम्।
सन्निवेश्याऽऽत्ममात्रासु सर्वभूतानि निर्ममे॥

इति। षण्णामिति षडिन्द्रियं समस्तलिङ्गशरीरोपलक्षकम्। तथा च स्वयम्भूः स्वलिङ्गशरीरावयवान् सूक्ष्मान् अल्पान् आत्ममात्रासु स्वांशचेतनेषु संयोज्य सर्वप्राणिनः ससर्जेत्यर्थः। लिङ्गशरीरं निरूपितम्। स्थूलशरीरोत्पत्तिरुच्यते। दशगुणितमहत्तत्त्वमध्येऽहङ्कारोऽहङ्कारस्याऽपि दशगुणितस्य मध्ये व्योम व्योम्नोऽपि दशगुणितस्य मध्ये वायुर्वायोरपि दशगुणितस्य मध्ये तेजः तेजसोऽपि दशगुणितस्य मध्ये जलं जलस्याऽपि दशगुणितस्य मध्ये पृथिवी समुत्पद्यते। सैव स्थूलशरीरस्य बीजम्। तदेव च पृथिवीरूपं बीजमण्डरूपेण परिणमते। तस्याऽपि दशगुणितस्याऽण्डरूपस्य पृथिव्यावरणस्य मध्ये चतुर्दशभुवनात्मकं स्वयम्भुवः स्थूलशरीरं तत्सङ्कल्पादेवोत्पद्यते। तेनैव शरीरेण स्वयम्भूर्नारायण इत्युच्यते। तदुक्तं मनुना स्वयम्भुवं प्रकृत्य।

सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः।

अप एव ससर्जाऽऽदौ तासु बीजमवासृजत् ॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिं जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥

स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्ता स भूतानां ब्रह्माऽग्रे समवर्तत ॥

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्याऽयनं पूर्वं तेन नारायणः स्मृतः ॥

इत्यादिनेति। तत एव चाऽऽदिपुरुषात् व्यष्टिपुरुषाणां विभागादन्ते च तत्रैव लयात् स एव चैक आत्मेति श्रुतिस्मृत्योर्व्यवह्रियते। अतो न व्यवहारपरतया नारायण एव सर्वभूतानामात्मेति श्रुतिस्मृतिविरोध इति। ततश्च स नारायणो विराट्शरीरी स्वनाभिकमलकर्णिकास्थानीयस्य सुमेरोरुपरि चतुर्मुखाख्यस्वयम्भुवं सृष्ट्वा तद्द्वाराऽन्यानपि व्यष्टिशरीरिणः स्थावरान्तान् ससर्ज। तथा च स्मर्यते।

तच्छरीरसमुत्पन्नैः कार्यैस्तैः करणैः सह।
क्षेत्रज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः ॥

इति। यत् तु शेषशायिनो नारायणस्य नाभिकमलश्रोत्रचक्षुरादिभ्यश्चतुर्मुखस्याऽऽविर्भावः श्रूयते तद् दैनन्दिनसर्गेष्वेव कल्पभेदेन मन्तव्यम्। दैनन्दिनप्रलयेष्वेव हि नारायणशरीरे प्रविश्यैकीभूय सुप्तानां देवानां चतुर्मुखादिक्रमेणाऽऽविर्भावः शेषशायिनः सकाशाद् घटते न त्वादिसर्गेषु। दैनन्दिनप्रलय

एव लीलाविग्रहेण शयनादिति। तदेवं सङ्क्षेपतश्चतुर्विंशतितत्त्वानि तेषां सृष्टिरूपं प्रयोजनं चोक्तम्। तत्र यद् यस्माज् जायते तस्य तदापूरणेनैव स्थितिः ततस्तस्य संहारोऽपि तत्रैव भवति।

यद् यस्माज् जायते तत्त्वं तत् तत्र प्रविलीयते।
लीयन्ते प्रतिलोमानि जायन्ते चोत्तरोत्तरम्॥

इति भारतादिभ्य इति। एते च सृष्टिस्थितिसंहाररूपाः स्थूला एव परिणामाश्चतुर्विंशतितत्त्वानां कूटस्थपुरुषविवेकाय प्रदर्शिताः। सूक्ष्मा अप्यन्ये प्रतिक्षणपरिणामा एतेषां स्मर्यन्ते। तथा।

नित्यदा ह्यङ्गभूतानि भवन्ति न भवन्ति च।
कालेनाऽलक्ष्यवेगेन सूक्ष्मत्वात् तन् न दृश्यते॥

इति। अतश्च सर्वं जडवस्तु परमार्थतः सर्वदैवाऽसदुच्यते। ततश्च तस्माद् विरज्याऽऽत्मैव परमार्थसत्यो दुःखभीरुभिर्द्रष्टव्यः। तदुक्तमनुगीतायाम्।

अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान्।
महाहङ्कारविटप इन्द्रियाङ्कुरकोटरः॥
महाभूतप्रशाखश्च विशेषप्रतिशाखवान्।
सदापर्णः सदापुष्पः शुभाशुभफलोदयः॥
आजीवः सर्वभूतानां ब्रह्मवृक्षः सनातनः।
एतज् ज्ञात्वा च तत्त्वेन ज्ञानेन परमासिना॥
छित्त्वा चाऽक्षरतां प्राप्य जहाति मृत्युजन्मनी।

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे विवेकप्रतियोगिनां प्रकृत्यादीनां स्वरूपपरिच्छेदः॥ ०॥

इति साङ्ख्यसारस्य पूर्वभागः॥

## अथोत्तरभागः ॥

### प्रथमः परिच्छेदः ॥

अथ शिष्यैः सुखेनैव ग्रहीतुं पद्यमालया।
विवेकस्याऽनुयोग्यात्मा पुरुषाख्यो निरूप्यते ॥ १ ॥
तत्र सामान्यतः सिद्धो जानेऽहमितिधीबलात्।
द्रष्टाऽतो नित्यविभ्वादिधर्मैरेव स साध्यते ॥ २ ॥
भोक्ता नित्यस्तदर्थत्वात् तत्कर्मोत्पादितत्वतः।
महदादिविकाराणां सर्वेषामविशेषतः ॥ ३ ॥
अपि चाऽदृष्टसंस्काराधारत्वाद् बीजरूपतः।
धीरनादिरतोऽस्याश्च सिद्धा भोक्तुरनादिता ॥ ४ ॥
स्वस्वामिभावानादित्वमृते भोक्तृव्यवस्थितेः,
स्वभक्तवृत्तिसंस्कारवत्त्वं स्वत्वं तु बुद्धिषु ॥ ५ ॥
स्वाम्यं स्वनिष्ठसंस्कारहेतुवृत्तेश्च भोक्तरि।
अतश्च घटते स्वत्वनाशे कैवल्यमात्मनः ॥ ६ ॥
भोक्तुश्चाऽनादिभावस्य विनाशे हेत्वसम्भवात्।
न नाशो भोक्तुरस्तीति भोक्ता नित्यो हि सिध्यति ॥ ७ ॥
जन्यो ज्ञानप्रकाशोऽस्य नित्यत्वे तु न युज्यते।
न ह्यप्रकाशे कुत्राऽपि प्रकाशोत्पत्तिरीष्यते ॥ ८ ॥
कार्ये प्रकाशाख्यगुणोऽवयवानां हि तद्गुणः।
कारणं तेन नाऽनित्यः प्रकाशो नित्यवस्तुनि ॥ ९ ॥

प्रकाशाश्रयसंयोगात् प्रकाशभ्रम इन्धने।
आदर्शे चाऽऽवृतेर्भङ्गात् प्रकाशोत्पत्तिविभ्रमः॥ १०॥
तस्मान् नित्यात्मनो ज्ञानं नित्यं वाच्यं तथा सति।
लाघवाज् ज्ञानमेवाऽऽत्मा निराधारः प्रकल्प्यते॥ ११॥
अनाश्रिततया द्रव्यं संयोगादेश्च तन् मतम्।
अतो ज्ञानेऽहमित्यादिबुद्धिरप्युपपद्यते॥ १२॥
पिण्डेऽहन्धीर्हि मूढानां ध्रुवैवाऽनादिदोषतः।
संयोगात् तत्र पिण्डे तु ज्ञानवत्त्वमतिः प्रमा॥ १३॥
सन्तु वाऽऽधेयताल्पत्वजन्मनाशादिबुद्धयः।
श्रोत्रस्य नभसीवाऽर्थज्ञानस्य ज्ञानमात्रके॥ १४॥
तस्माल् लाघवतर्केण बाधकाभावतस्तथा।
श्रुत्यादिभिश्च नित्यात्मा चिद्रूपेणैव सिध्यति॥ १५॥
तज् ज्ञानं विभु नित्यत्वाद् देहव्यापितयाऽपि च।
मध्यत्वे नाशिता हि स्यादणुत्वे वाऽल्पदेशता॥ १६॥
विभुत्वेऽपि स्वधीवृत्तेरेव साक्षान् निरीक्षणात्।
न सर्वत्र सदा सर्वभानं ज्ञाने प्रसज्यते॥ १७॥
अर्थभानं चितावर्थप्रतिबिम्बो मतो बुधैः।
वृत्तेरेव चितौ साक्षात् प्रतिबिम्बनयोग्यता॥ १८॥
अतोऽसङ्गेऽपि कूटस्थचैतन्ये विभुनि ध्रुवे।
वृत्तिद्वारकमेवाऽन्यभानं फलबलान् मतम्॥ १९॥
अन्वयव्यतिरेकाभ्यां वृत्तिजन्यतयाऽखिलः।
वृत्त्यैकाधिकरण्येन कामादिर्धीषु नाऽऽत्मसु॥ २०॥

अतोऽन्तःस्थविकाराणां स्वस्वबुद्धिष्ववस्थितेः ।
कूटस्थ एव सर्वोऽपि चिदाकाशगणः समः ॥ २१ ॥
नित्यशुद्धो नित्यबुद्धो नित्यमुक्तो निरञ्जनः ।
स्वप्रकाशो निराधारः प्रदीपः सर्ववस्तुषु ॥ २२ ॥
नन्वेवमेकतैवाऽस्तु लाघवादात्मनां खवत् ।
धीष्वेव सुखदुःखादिवैधर्म्यादिति चेन् न तत् ॥ २३ ॥
भोगाभोगादिवैधर्म्यैणैकरूपेऽपि चिद्गणे ।
श्रुतिस्मृतिभ्यामुक्तेन भेदसिद्धेः परस्परम् ॥ २४ ॥
सुखादिप्रतिबिम्बात्मा भोगोऽप्यस्य न वस्तुतः ।
तथाऽप्यस्य चितौ भावाभावौ स्यातां हि भेदकौ ॥ २५ ॥
औपाधिकौ यथा श्यामरागौ स्फटिकभेदकौ ।
खदृष्टान्तस्तु विषमो वैधर्म्यासिद्धितोऽम्बरे ॥ २६ ॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे पुरुषस्वरूप-
परिच्छेदः ॥ * ॥

## अथ द्वितीयः परिच्छेदः ।

अथाऽऽत्मानात्मवधर्म्ये गुणदोषात्मके तयोः ।
वक्ष्ये विस्तारतो येन विवेकोऽतिस्फुटो भवेत् ॥ १ ॥
सामान्यात्मघनाकाशे सान्निध्येरितशक्तिभिः ।
जायते लीयते भूत्वा भूयोऽयं जगदम्बुदः ॥ २ ॥
त्रिगुणात्मकशक्तीनां परिणामैरतश्चितिः ।
आधारविधया विश्वोपादानमविकारतः ॥ ३ ॥
यथाऽऽधारतया तोयं धरोपादानमिष्यते ।
स्वस्थपार्थिवतन्मात्रद्वारेणैवं चितिर्मता ॥ ४ ॥
अतो जगदुपादानमपि ब्रह्माऽविकारतः ।
कूटस्थनित्यपर्यायपरमार्थसदुच्यते ॥ ५ ॥
स्वार्थत्वात् स्वानुभूत्या च सिद्धत्वात् परमार्थसत् ।
स्वतः स्थित्या स्वतः सिद्ध्या लोकैः सन्निति धीर्यते ॥ ६ ॥
प्रतिक्षणविकारेण तैस्तै रूपैरपायतः ।
प्रकृत्यादिरसत् सर्वो जडार्थोऽब्धौ तरङ्गवत् ॥ ७ ॥
यत् तु कालान्तरेणाऽपि नाऽन्यसञ्ज्ञामुपैति वै ।
परिणामादिसम्भूतां तद् वस्त्वित्यादिकस्मृतेः ॥ ८ ॥
परार्थाधीनसत्त्वाच्च च परदृष्ट्या च सिद्धितः ।
परतः सन्नसन्नेव तत्परापेक्षया मतः ॥ ९ ॥
सतोऽस्तित्वं तु नाऽसत्ता नास्तित्वे सत्यता कुतः ।
इति गारुडतश्चैवं सदसत्त्वव्यवस्थितेः ॥ १० ॥

अतो न सन् नाऽसदिदं जगत् सदसदात्मकम्।
असद्विषयकत्वाच् च तस्य धीस्तात्त्विको भ्रमः ॥ ११ ॥
जगद्वृत्तस्य चैतन्यं सारोऽसारस्तथेतरत्।
प्रपञ्चस्य स्थिरांशो हि चितिरेवाऽविकारतः ॥ १२ ॥
तदन्यदखिलं तुच्छमसारत्वादुदीर्यते।
तथाऽन्तमसच् चाऽपि तदपेक्षास्थिरत्वतः ॥ १३ ॥
एवंविधैवाऽऽत्मसत्ता अन्यासत्ता च दर्शिता।
वासिष्ठादौ विस्तरतो यथा लेशात् तदुच्यते ॥ १४ ॥
स्वप्नो जाग्रत्यसद्रूपः स्वप्ने जाग्रदसद्वपुः ॥
मृतिर्जन्मन्यसद्रूपा मृतौ जन्माऽप्यसन्मयम् ॥ १५ ॥
जगन्मयो भ्रान्तिरिति न कदाऽपि न विद्यते।
विद्यते न कदाचिच् च जलबुद्बुदवत् स्थितम् ॥ १६ ॥
आत्मैवाऽस्ति परं सत्यं नाऽन्याः संसारदृष्टयः।
शुक्तिकारजतं यद्वद् यथा मरुमरीचिका ॥ १७ ॥
अस्ति सर्वगतं शान्तं परमात्मघनं शुचि।
अचिन्त्यचिन्मात्रवपुः परमाकाशमाततम् ॥ १८ ॥
तत् सर्वगं सर्वशक्ति सर्वं सर्वात्मकं स्वयम्।
यत्र यत्र यथोदेति तथाऽऽस्ते तत्र तत्र वै ॥ १९ ॥
आविर्भावतिरोभावमयास्त्रिभुवनोर्मयः।
स्फुरन्त्यतितते यस्मिन् मराविव मरीचयः ॥ २० ॥
असतेव सती तोयनद्येव लहरी चला।
मनसैवेन्द्रजालश्रीर्जागती प्रवितन्यते ॥ २१ ॥

ब्रह्मणा तन्यते विश्वं मनसैव स्वयम्भुवा।
मनोमयमतो विश्वं यन् नाम परिदृश्यते॥ २२॥
यो ह्यखण्डमतिर्मूढो रूढो न वितते पदे।
वज्रसारमिदं तस्य जगदस्त्यसदेव सत्॥ २३॥
अव्युत्पन्नस्य कनके कानके कटके यथा।
कटकज्ञप्तिरेवाऽस्ति न मनागपि हेमधीः॥ २४॥
तथाऽज्ञस्य पुरागारनगनागेन्द्रभासुरा।
इयं दृश्यदृगेवाऽस्ति न त्वन्या परमार्थदृक्॥ २५॥
इत्यादिवाक्यैर्वासिष्ठे नाऽत्यन्तासत्यतोदिता।
जगतोऽपरवाक्यैर्हि सत् कार्यं प्राकृतं मतम्॥ २६॥
नामरूपविनिर्मुक्तं यस्मिन् सन्तिष्ठते जगत्।
तमाहुः प्रकृतिं केचिन् मायामेकेऽपरे त्वणून्॥ २७॥
सुषुप्तावस्थया चक्रपद्मरेखा शिलोदरे।
यथा स्थिता चितेरन्तस्तथेयं जगदावली॥ २८॥
प्रकृतिव्रततिर्व्योम्नि जाता ब्रह्माण्डसत्फला।
इत्यादिवाक्यैः साङ्ख्यीयसत्कार्याद्युपवर्णनात्॥ २९॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे आत्मानात्मनोः सत्यत्वासत्यत्ववैधर्म्यपरिच्छेदः॥ * ॥

---

## अथ तृतीयः परिच्छेदः ॥

तदेवमात्मनः सत्ता दर्शिताऽन्यविलक्षणा ।
अथ चिद्रूपतां वक्ष्ये बुद्धिवृत्तिविलक्षणाम् ॥ १ ॥
अनुभूतिश्चितिर्बोधो वेदनं चोच्यते पुमान् ।
वेद्यं जडं तमोऽज्ञानं प्रधानादिकमुच्यते ॥ २ ॥
वेदनं वेद्यसम्बन्धादेव वेत्त्रभिधीयते ।
यथा प्रकाश्यसम्बन्धात् प्रकाशोऽपि प्रकाशकः ॥ ३ ॥
यथा वाऽर्थोपरागेण भानमर्थस्य भासकम् ।
एवं वेद्योपरक्तस्याऽस्वांशस्याऽऽधारताऽऽत्मनि ॥ ४ ॥
असङ्गायां चितौ वेद्योपरागोऽयं न धीष्विव ।
किन्तु साक्षाद् द्वारतो वा चिति तत्प्रतिबिम्बनम् ॥ ५ ॥
बाह्यं वृत्त्याख्यकरणाभावादनुपरागतः ।
चितिर्नेक्षते चेत्यं विभुत्वेऽपि च सर्वतः ॥ ६ ॥
तथा चिदपि वृत्त्याख्यकरणाभावतोऽर्थवत् ।
स्वगोचरां वृत्तिमृते तिष्ठत्यज्ञातसत्तया ॥ ७ ॥
तदेवं चिन् निराकारा प्रकाशाकाशरूपिणी ।
तिष्ठत्यव्यक्तरूपा च मोक्षादौ वृत्त्यभावतः ॥ ८ ॥
बुद्धिवृत्तिस्तु साकारा परिच्छिन्ना च दीपवत् ।
व्यक्ता च सर्वदा तद्वदसङ्ख्या क्षणभङ्गुरा ॥ ९ ॥
जडा च परदृश्यत्वाद् घटदीपादिवन् मता ।
वृत्तेः प्रकाशता त्वर्थाकारत्वादत्तवैव हि ॥ १०॥
यथाऽऽस्याकारतार्हत्वादादर्शस्तत्प्रकाशकः ।
सर्वाकारत्वयोग्यत्वात् सैवं सर्वप्रकाशिका ॥ ११ ॥

न पुनर्वृत्तिद्रष्टृत्वं चितस्तद्भिन्नद्रष्टृता।
वृत्तेर्यतो गौरवं स्याद् द्वयोर्ज्ञातृत्वकल्पने॥ १२॥
बुद्ध्यारूढं त्वन्यवस्तु तद्द्वारा प्रतिबिम्बितम्।
पश्यत्यनुभवो नाऽन्यो द्रष्टा बुद्ध्यादिकोऽखिलः॥ १३॥
इत्येवं बुद्धिवृत्तिभ्यो वैलक्षण्यं चितीरितम्।
चिदचित्त्वाख्यवैधर्म्यं देहादिभ्यः स्फुटन्त्विदम्॥ १४॥
अन्योन्यप्रतिबिम्बेन सारूप्याद् वृत्तिबोधयोः।
बोधव्यवहृतिर्वृत्तौ लोहेऽग्निव्यवहारवत्॥ १५॥
नैवाऽल्पबुद्ध्याशक्योऽयं विवेको वृत्तिबोधयोः।
तार्किका यत्र सम्मूढाः साङ्ख्यानां श्रेष्ठता यतः॥ १६॥
विज्ञानवादिनो बौद्धा वृत्तिबोधाविवेकतः।
ज्ञातात्मत्वश्रुतौ मूढा मेनिरे क्षणिकां चितिम्॥ १७॥
सत्त्वपुंसो विवेकोऽयं वृत्तितद्बोधरूपयोः।
नाऽशक्यः सुधियां यद्वद्धंसानां क्षीरनीरयोः॥ १८॥
एतदन्तश्च संसारो मोक्षस्तत्रैव संस्थितः।
यद् वृत्तिभ्यो विवेकेन तद्बोधस्याऽवधारणम्॥ १९॥
सर्वोऽप्यनुभवं वेद न कश्चिदपि वेदताम्।
विवेकमात्रमस्मिन् हि भासमानेऽप्यपेक्षते॥ २०॥
आत्मा विवेक्तुं बाह्यार्थे न शक्यो वृत्तिमिश्रणात्।
अतो वृत्तौ विवेक्तव्यो वृत्तिबोधतयैव सः॥ २१॥
यथा बुद्ध्या विवेकार्हो नाऽग्निरङ्गारमिश्रणात्।
सोऽङ्गारे तु विवेकार्हो काष्ठदग्धृतया स्फुटम्॥ २२॥

अतएव अुतौ स्वप्ने दृश्यवृत्तिविवेकतः ।
स्वयंज्योतिःस्वरूपेण तस्या द्रष्टा प्रदर्शितः ॥ २३ ॥
साक्षात् प्रकाशो यो यस्य स तद्भिन्नो मतो बुधैः ।
घटादिभ्यो यथाऽऽलोक आलोकाच् चाऽपि वृत्तयः ॥२४॥
वृत्तेः साक्षात् प्रकाशत्वादतो ऽनुभवरूपकः ।
वृत्तिभ्यो भिन्न आत्मेति शीघ्रो मार्गः स्वदर्शने ॥ २५ ॥
एवमादिप्रकारेण बुद्धिसत्त्वप्रकाशतः ।
विलक्षणतया सिद्धश्चित्प्रकाशोऽस्य भासकः ॥ २६ ॥
स्वप्नदेहादिदृष्टान्तैस्तस्माच्छ्रुत्यादिदर्शितैः ।
जाग्रद्देहेन्द्रियार्थेभ्यश्चितिर्भिन्नतया मता ॥ २७ ॥
स्वप्ने देहादिकं सर्वं चिद्भिन्नं चिति भासते ।
जाग्रत्येवं विशेषस्तु यद् बाह्यमपि भासते ॥ २८ ॥
स्वप्ने मनोमयत्वाच् च साक्षाच् चिद्विषयोऽखिलम् ।
करणद्वारतो बाह्यं चितो जाग्रति गोचरः ॥ २९ ॥
सर्वं देहादिकं स्वप्नजाग्रतोरेकरूपतः ।
भाति चिद्व्योम्नि नाऽत्रार्थबाह्यान्तर्भेदतो भिदा ॥ ३० ॥
चिद्व्योम्नि वासनातो धीः प्रमाणाद् वाऽर्थरूपिणी।
ततश्चितोऽर्थभानं यत् तत् समं स्वप्नजाग्रतोः ॥ ३१ ॥
तदिदं स्वानुभूत्यैव प्रोच्यते न परोक्षतः ।
स्वप्नदृष्टान्तसदृशो नोपायोऽस्त्याऽऽत्मदर्शने ॥३२॥
सुषुप्तौ हि यथा स्वप्ने स्वात्मन्येवेक्षतेऽखिलम्।
आत्मानं चैकदेशस्थं मन्यते जागरे तथा ॥ ३३ ॥

सुषुप्तिरात्मनस्तत्त्वं स्वरूपावस्थितेस्तदा।
जाग्रत्स्वप्नौ मायिकौ तु मृषासारूप्यतो धिया॥ ३४॥
बुद्धेः सुषुप्तिस्तमसाऽऽवरणं तद्विलक्षणा।
चितेः सुषुप्तिर्वृत्त्याख्यदृश्यावरणशून्यता॥ ३५॥
पूर्णः कूटस्थनित्यश्च स्वस्वधीमात्रवृत्तिदृक्।
वृत्त्याख्यदृश्यविरहात् सर्वदा नेक्षते पुमान्॥ ३६॥
वृत्तिदेशे यथा बोधस्तथा सर्वत्र सर्वदा।
वृथैव तप्यते मूढैर्व्ययनाशादिनाऽऽत्मनः॥ ३७॥
दुःखभोगमहारोगनिदानं देहगेहिनी।
बुद्धिर्न त्यज्यते मूढैर्महानिद्रासुखं यतः॥ ३८॥
अनादिबुद्धिगार्हस्थ्यं विवेकस्त्यज्यते न चेत्।
न मोक्षो बाह्यसन्यासादिहाऽमुत्राऽसुखं परम्॥ ३९॥
समचिन्मात्ररूपेषु स्वपरात्मसु सर्वदा।
बुद्धिमात्रविवेकेन स्वपरादिभिदा मृषा॥ ४०॥
चिन्मात्रे निर्गुणे स्वामिन्यारोप्यैवाऽऽत्मकर्तृताम्।
स्वाम्यवज्ञापराधेन वध्यते धीः स्वकर्मभिः॥ ४१॥
साध्वी तु धीः पतिं दृष्ट्वा याथातथ्येन तत्परा।
इहाऽऽनन्दमयी चाऽन्ते पतिदेहे लयं व्रजेत्॥ ४२॥
नाहं कर्ता सुखी दुःखी चिन्मात्राकाशरूपकः।
एवं नाथं चिन्तयन्ती न पत्युर्दुःखभोगदा॥ ४३॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे आत्मानात्मनोश्चिदचित्त्ववैधर्म्यपरिच्छेदः॥ ० ॥

## अथ चतुर्थः परिच्छेदः ॥

इत्यवमात्मनः प्रोक्तो बुद्ध्यादिभ्यो विलक्षणः ।
चित्प्रकाशोऽधुनाऽऽनन्दरूपता वक्ष्यते तथा ॥ १ ॥
दुःखं कामसुखापेक्षा सुखं दुःखसुखात्ययः ।
इति स्मृतेः सुखात्मत्वं नित्यनिर्दुःखताऽऽत्मनः ॥ २ ॥
परिभाषाबलाद् रूढिबाधः सर्वत्र सम्मतः ।
अन्यथा परिभाषेयं मोक्षशास्त्रे भवेद् वृथा ॥ ३ ॥
यद्वा परोक्षवादेन परमप्रियताप्तये ।
रूपिका सुखगीः पुंसि विभुत्वाप्त्यै खशब्दवत् ॥ ४ ॥
नाऽऽनन्दं न निरानन्दमित्यादिश्रुतिभिः स्फुटम् ।
आत्मन्यानन्दरूपत्वनिषेधाद् युक्तिसंयुतात् ॥ ५ ॥
उपासाद्यर्थशून्यत्वान् नेति नेति श्रुतेस्तथा ।
निषेधवाक्यं बलवद् विधिवाक्यादिति स्थितिः ॥ ६ ॥
निर्निरानन्दमिति च स्वोपाध्यानन्दभोक्तृताम् ।
स्वामित्वरूपिणीं वक्ति न निर्धन इतीव हि ॥ ७ ॥
प्रेयोऽन्यस्माच् च सर्वस्मादिति श्रुत्या सुखादपि ।
उक्त आत्मा प्रियस्तस्य सुखत्वोक्तिश्च नोचिता ॥ ८ ॥
आनन्दाद्याः प्रधानस्य इति वेदान्तसूत्रतः ।
वेदान्तेऽपि न सिद्धान्त आत्मनः सुखरूपता ॥ ९ ॥
विस्तराद् ब्रह्ममीमांसाभाष्येऽस्माभिः परीक्षितम् ।
चितेरसुखरूपत्वं प्रेमा व्याख्यायतेऽधुना ॥ १० ॥

मा न भूवमहं शश्वद् भूयासमितिरूपकः।
निर्निमित्तोऽनुरागो यः स प्रेमा परमश्चिति ॥ ११ ॥
अन्याशेषतया बुद्धेः स्नेहोऽयं न सुखेष्वपि।
अतः प्रियतमः स्वात्मा नाऽन्योऽतो ह्यधिकः प्रियः ॥ १२ ॥
आत्मत्वेनाऽऽत्मनि प्रेमा न सुखत्वाद्यपेक्षते।
अहं स्यामिति चेद् यस्मात् सुखं स्यामिति नेष्यते ॥ १३ ॥
तथा च सुखताद्दुःखाभावते वाऽऽत्मताऽपि च।
प्रेम्णि प्रयोजिका सिद्धा स्वतःप्रेमात्मतैव तु ॥ १४ ॥
तस्माद् वस्तुत आत्मैव प्रियो नौपाधिकत्वतः।
औपाधिकीतरप्रीतिरस्थिरत्वान् न तात्त्विकी ॥ १५ ॥
प्रीतिरन्यत्र चाऽनित्याऽविवेकाद्यैः सुखादिषु।
आत्मप्रीतिस्तु नित्याऽतोनित्यानन्दः पुमान् मतः ॥ १६ ॥
आत्मनः प्रियतां बुद्धिर्यदि पश्येत् समाहिता।
सर्वातिशायिनीं तर्हि सुखाब्धौ किं न मज्जति ॥ १७ ॥
प्रियदर्शनतो बुद्धेः सुखं लोकेषु दृश्यते।
अतोऽनुमेयं परमप्रियदृष्ट्या परं सुखम् ॥ १८ ॥
आत्मार्थत्वेन सर्वत्र प्रीतिरात्मा स्वतः प्रियः।
इति शश्वच्छ्रुतिः प्राह आत्मदृष्टिविधित्सया ॥ १९ ॥
ततोऽप्यनुपमं ज्ञेयं प्रियात्मेक्षणतः सुखम्।
भुञ्जते तत् सुखं धीरा जीवन्मुक्ता महाधियः ॥ २० ॥
अन्तरात्मसुखं सत्यमविसंवादि योगिनम्।
अपश्यन् कृपणो बाह्यसुखार्थी वञ्चितो जनः ॥ २१ ॥

सुखाशया बहिः पश्यन् देही चेन्द्रियरन्ध्रकैः ।
वाताऽनैर्गृहीत्वाऽन्तः सुखं वेत्ति न बाह्यदृक् ॥ २२ ॥
दुःखलभ्यान् दुःखमयान् परिणामेऽतिदुःखदान् ।
विषयोत्थान् सुखाभासान् धिक् स्वात्मसुखरोधकान् ॥२३॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे आत्मानात्मनोः प्रियाप्रियत्ववैधर्म्यपरिच्छेदः ॥ * ॥

---

## अथ पञ्चमः परिच्छेदः ।

परिच्छेदत्रयेणोक्तं सच्चिदानन्दरूपकम् ।
गीयमानं श्रुतिस्मृत्योरात्मनो लक्षणत्रयम् ॥ १ ॥
तद्वैपरीत्यमन्येषां लक्षणं चेरितं स्फुटम् ।
आभ्यां तु गुणदोषाभ्यां विवेको दोषहृत् परः ॥ २ ॥
नैर्गुण्यसगुणत्वादिवैधर्म्याण्यपराण्यपि ।
बहूनि वक्ष्ये संक्षेपात् पुम्प्रकृत्योरतः परम् ॥ ३ ॥
धियोऽर्थाकारया वृत्त्या जनितत्वात् सुखादयः ।
सामानाधिकरण्येन कल्प्यन्ते लाघवाद् धियाम् ॥ ४ ॥
महदादेर्जडत्वेन तद्धेतुश्च जडो मतः ।
कार्यकारणसाजात्यं दृष्टं लोके हि सर्वतः ॥ ५ ॥
अत आत्मा बोधमात्रतया सिध्यति लाघवात् ।
गुणाः सर्वे प्रकृत्यादेर्विकारास्तेतरेऽखिलाः ॥ ६ ॥
आत्मा तु निर्गुणस्तद्वत् कूटस्थश्च मतो बुधैः ।
चितेः कूटस्थसञ्ज्ञा तु स्थिरत्वाद् गिरिकूटवत् ॥ ७ ॥

लेपश्चेतरसम्बन्धे तद्रूपैरूपरक्तता।
यथा विषयसम्बन्धाद् बुद्धौ भवति वासना॥ ८॥
भाण्डादौ द्रव्ययोगाच् च तत्तद्द्रव्यस्य वासना।
लेपहेतुश्च सम्बन्धः सङ्गः सम्बन्धि चाऽञ्जनम्॥ ९॥
अतो निरञ्जनोऽसङ्गो निर्लेपश्चोच्यते पुमान्।
नभःपुष्करपत्रादिदृष्टान्तैः परमर्षिभिः॥ १०॥
चिन्मात्रानन्तशक्त्यब्धौ पुमर्थपवनेरिताः।
सत्त्वादिशक्तयो यान्ति विश्वबुद्बुदरूपताम्॥ ११॥
अत ईशश्चिदात्मैव जगतः सन्निधानतः।
मणिवत् प्रेरकत्वेन जडानामयसामिव॥ १२॥
पुमानेव जगत्कर्ता जगद्भर्ताऽखिलेश्वरः।
स्वाम्यर्थे भृत्यवद् यस्माज् जडवर्गः प्रवर्तते॥ १३॥
करणानि च देहेषु राजार्थमधिकारिवत्।
भोग्यजातं मनोमन्त्रिण्यर्पयन्ति स्वभावतः॥ १४॥
तैर्भोग्यैर्युक्तमात्मानमावेदयति धीश्चिति।
इच्छामात्रेण तद् भुङ्क्ते राजेवाऽऽत्माऽखिलेश्वरः॥ १५॥
धनादेरीश्वरो देहो देहस्येन्द्रियमीश्वरम्।
इन्द्रियस्येश्वरी बुद्धिर्बुद्धेरात्मेश्वरः परः॥ १६॥
कूटस्थस्येश्वरस्याऽन्यो नाऽस्ति प्रेरक इत्यतः।
ईश्वरस्याऽवधित्वेन द्रष्टा वै परमेश्वरः॥ १७॥
अन्यस्याऽऽगन्तुकैश्वर्यं बहुव्यापारसङ्कुलम्।
निर्व्यापारस्य निर्दोषमनाद्यैश्वर्यमात्मनः॥ १८॥

सर्वशक्तिमयो ह्यात्मा शक्तिमण्डलताण्डवः ।
संसारं तन्निवृत्तिं च माययाऽऽप्नोति हेलया ॥ १९ ॥
सर्वातिशायि निर्दोषमैश्वर्यमिदमात्मनः ।
पश्यतो योगिनो ब्राह्ममप्यैश्वर्यं तृणायते ॥ २० ॥
बाह्यस्याऽऽत्मोच्यते देहो देहस्याऽऽत्मेन्द्रियाणि च ।
बुद्धिरात्मेन्द्रियान्तस्य बुद्धेरात्मा तु चिन्नभः ॥ २१ ॥
अत आत्मावधित्वेन परमात्मोच्यते चितिः ।
तथाऽन्तःकरणैर्योगाज् जीव इत्युच्यते चितिः ॥ २२ ॥
अविद्याकार्यरहितः परमात्मेति च स्मृतिः ।
यस्य यद् व्यापकं तस्य तद् ब्रह्माऽतो धरादिकम् ॥२३॥
प्रकृत्यन्तं भवेद् ब्रह्म स्वस्वकार्याद्यपेक्षया ।
सेश्वरे साङ्ख्यवादेऽपि चितेरेवाऽनुमन्यते ॥ २४ ॥
परे वा परमात्मत्वादिकं तु न जडे क्वचित् ।
अध्यक्षव्यापकत्वाभ्यां परं ब्रह्म तु चेतनः ॥ २५ ॥
तस्याऽध्यक्षं व्यापकं च न हेतुविधयाऽस्ति हि ।
असङ्ख्यात्मा नभोराशिरविभक्तैकरूपकः ॥ २६ ॥
सोऽतश्चिद्घनविज्ञानघनात्मघनसंज्ञकः ।
प्रकाशस्याऽनपेक्षत्वात् स्वस्य द्रष्टृतयाऽपि च ॥ २७ ॥
स्वप्रकाशः पुमानुक्त इतरे तद्विलक्षणाः ।
भोगोऽभ्यवहृतिः सा च कूटस्थे नाऽस्ति धीष्विव ॥ २८ ॥
धीवृत्तिप्रतिबिम्बाख्यगौणभोगा तु भोक्तृता ।
साक्षाद् धीवृत्तिद्रष्टृत्वाद् बुद्धिसाक्ष्युच्यते पुमान् ॥ २९ ॥

विना विकारं द्रष्टृत्वात् साक्षी ह्युक्तोऽखिलस्य सः।
चैत्योपरागरूपत्वात् साक्षिताऽप्यध्रुवा चितः॥ ३०॥
उपलक्षणमेवेदमपि व्यावृत्तये जडात्।
अतः पुमाननिर्देश्योऽणुश्च सूक्ष्मश्च कथ्यते॥ ३१॥
विना दृश्यमदृश्यत्वादव्यक्तश्चोच्यते स्वतः।
अदृश्यो दृश्यते राहुर्गृहीतेन यथेन्दुना॥ ३२॥
अदृश्यं चाऽस्यमादर्शे चित् तथा स्वस्थबुद्धिषु।
चिति विश्वस्य सङ्गश्चेद् विश्वं भासेत सर्वदा॥ ३३॥
विश्वाधारोऽप्यतः शून्यमिति चिद्गीयते खवत्।
दृश्यदोषान् मृषाबुद्धिर्दृश्येऽारोप्य निर्मले॥ ३४॥
आदर्शे मलवद् व्योम्नि दोषदृष्ट्या तु तप्यते।
वस्तुतस्त्विति नाऽस्त्येव मलो दृश्याश्रितः सदा॥ ३५॥
अतश्च निर्मलः स्वस्थो निर्दोषश्चोच्यते पुमान्।
सजातीयेषु वैधर्म्यलक्षणा नाऽस्ति यद् भिदा॥ ३६॥
अत आत्मा समः प्रोक्त ऐकरूप्याच्च सर्वदा।
देहाध्यक्षतया देही पुर्यभिव्यक्तितः पुमान्॥ ३७॥
एकाकित्वाददितीयः केवलश्चोच्यते तु सः।
चिच्छक्त्यप्रतिबन्धेन प्रोच्यतेऽनावृतः पुमान्॥ ३८॥
सर्वस्वामितया चाऽऽत्मा क्षेत्रज्ञः क्षेत्रवेदनात्।
हृत्सरोवरधीपद्मदलवृत्तिषु लीलया॥ ३९॥
चरन्निवाऽऽनन्दमीनान् भुञ्जानो हंस उच्यते।
हकारेण बहिर्याति सकारेण विशन् पुनः॥ ४०॥

प्राणवृत्त्याऽनया चाऽपि प्राण्यत्मा हंस उच्यते ।
शरीरागरिहृद्ग्रामगुहायां बुद्धिभार्यया ॥ ४१ ॥
व्यज्यमानस्तया साधं स्वपन्निव गुहाशयः ।
त्रिगुणात्मकमायां स्वां सान्निध्यात् परिणामयन् ॥ ४२ ॥
मायीति कथ्यते चाऽऽत्मा तत्कृतानन्तवेषधृक् ।
खान्येकादश भूतानि पञ्चैतानि तु षोडश ॥ ४३ ॥
पुंसः कलास्तत्त्वतस्तु निरंशत्वात् स निष्कलः ।
अहंशब्दः स्वामिवाची स्वामी साक्षी तु चेतसः ॥ ४४ ॥
अतोऽहमिति शब्देन चिन्मात्रं प्रोच्यते बुधैः ।
सर्वेश्वरः सर्ववेत्ता सर्वकर्ताऽद्वयः पुमान् ॥ ४५ ॥
सामान्यादुच्यते यद्वद् राजा सर्वनराधिपः ।
आत्माद्वैतस्य सूत्रेण जातिमात्रेण वर्णनात् ॥ ४६ ॥
प्रलये हि विजातीयद्वैतशून्यत्वमात्मनाम् ।
असङ्गत्वान् नित्यशुद्धो नित्यबुद्धश्च चित्त्वतः ॥ ४७ ॥
नित्यमुक्तस्तथा नित्यनिर्दुःखत्वात् पुमान् मतः ।
इत्यादिगुरुशास्त्रोक्तदिशा स्वानुभवेन च ॥ ४८ ॥
वैधर्म्यादात्मनोऽनात्मविवेकः क्रियतां बुधैः ।
परिच्छेदचतुष्केण पुम्प्रकृत्योः सुविस्तरात् ।
वैधर्म्यगण उक्तोऽयं ध्यायिनामाशु मुक्तिदः ॥ ४९ ॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे आत्मवैधर्म्यगणपरिच्छेदः ॥ * ॥

## अथ षष्ठः परिच्छेदः ।

विवेकमेव सद्युक्त्या मत्वा तदनुभूयते ।
राजयोगं यथा कुर्यात् समासेन तदुच्यते ॥ १ ॥
अशक्तो राजयोगस्य हठयोगेऽधिकारवान् ।
वासिष्ठे हि वसिष्ठाय भुसुण्डेनैवमीरितम् ॥ २ ॥
ज्ञानावृत्ती राजयोगे प्राणायामासने हठे ।
मुख्ये तेऽङ्गतयाऽन्योन्यं सेव्ये शक्त्यनुसारतः ॥ ३ ॥
विषयेऽनन्तदोषा ये श्रुतिस्मृतिसमीरिताः ।
त आदौ परिद्रष्टव्याश्चित्तस्थैर्याय योगिभिः ॥ ४ ॥
कामबीजान्यनन्तानि सम्प्ररोहन्ति यद्धृदि ।
तत्राऽटवीनिभे ज्ञानपुण्यसस्यं न वर्धते ॥ ५ ॥
दोषदृष्ट्यग्निसन्दग्धे कामबीजे तु चेतसि ।
गुरुशास्त्रहलैः कृष्टे सुक्षेत्रे तद्विवर्धते ॥ ६ ॥
सत्येष्वसत्तां प्रचुरां तथा रम्येष्वरम्यताम् ।
सुखेषु प्रचुरं दुःखं पश्यन् धीरो विरज्यते ॥ ७ ॥
ब्रह्मलोकोऽपि नरको विनाशामेध्यपूरितः ।
युक्तश्च स्वाधिकैरन्यैस्त्रैगुण्यादपि दुःखयुक् ॥ ८ ॥
तत्रत्यैरपि मुक्त्यर्थं यत्यते जन्मभीरुभिः ।
अतो ज्ञेयः समासेन लोकः सर्वोऽपि दुःखयुक् ॥ ९ ॥
इदं मे स्यादिदं मा स्यादितीच्छाव्यथितं मनः ।
स्वभावात् तेन विज्ञेयं दुःखं चित्तेन सङ्गतिः ॥ १० ॥

सुखं सुषुप्तिः परमा दुःखं विश्ववेदनम् ।
सुखदुःखसमानोऽयं किमर्थं कुरुमाकृतेः ॥ ११ ॥
तस्मादनर्थानर्थाभान् परीक्ष्य विषयान् सुधीः ।
उपेक्षेत परमार्थार्थी वानरध्यानदृष्टिवत् ॥ १२ ॥
इत्यादिकाननन्तदोषदृष्ट्या रागस्य नाशने ।
मायाविवेकतः शुद्धमात्मानं चिन्तयेत् सदा ॥ १३ ॥
इदं तदिति निर्देष्टुं गुरुणाऽपि न शक्यते ।
उदासीनस्याऽऽत्मतत्त्वं स्वयमेव प्रकाशते ॥ १४ ॥
बुद्धिबोधात्मको बुद्धिसाक्षी बुद्धेः परो विभुः ।
कूटस्थोऽहं चिदादित्य इत्येकाग्रोऽनुचिन्तयेत् ॥ १५ ॥
वृत्तिबोधो घटच्छिद्रमिव नाश्यस्य ईक्ष्यते ।
वस्तुतो वृत्तिबोधोऽहं पूर्णो व्योमवदक्षयः ॥ १६ ॥
अन्तर्यद् दृश्यते सर्वं तद् बुद्धेर्वृत्तिरुच्यते ।
तेभ्यो दुःखात्मकेभ्योऽहं साक्षात् तद्वीक्षिता पृथक् ॥ १७ ॥
कर्मकर्तृविरोधो हि वृत्त्या वृत्तिप्रकाशने ।
वृत्तिधाराकल्पने च गौरवादिति निश्चितम् ॥ १८ ॥
हर्षशोकभयक्रोधलोभमोहमदैस्तथा ।
द्वेषाभिमानकार्पण्यनिद्रालस्यस्मरादिभिः ॥ १९ ॥
धर्माधर्मैश्च सम्पूर्णा बुद्धिर्दुःखमयी तु मे ।
आत्मानं दर्शयत्येव भास्करायेव रोगिणः ॥ २० ॥
अहं सर्वगतं शान्तं परमात्मघनं शुचि ।
अचिन्त्यचिन्मात्रनभो विश्वदर्पणमक्षयम् ॥ २१ ॥

निरञ्जनं निराधारं निर्गुणं निरुपद्रवम्।
निर्विशेषं सजातीयात् समस्तार्थावभासकम् ॥ २२ ॥
ब्रह्मविष्णुमहेशाद्याः स्थावरान्ताश्च चेतनाः।
अवैधर्म्यात्मकाभेदादहमित्यनुचिन्तयेत् ॥ २३ ॥
अहमन्ये च पुरुषाः समचिद्रामरूपिणः।
अत आत्मैक एवाऽहमिति श्रुतिषु गीयते ॥ २४ ॥
इति पश्यन् स्वभोगैश्च योगी विश्वं प्रपूजयेत्।
आत्मयागोऽप्ययं प्रोक्तः श्रुत्युक्तः साङ्ख्ययोगिनाम्॥२५॥
सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥ २६ ॥
इत्येवं मनुनाऽप्यात्मयागो ज्ञानाङ्गमीरितः।
तस्मादभयदानेन स्वभोगाद्यर्चनेन च ॥ २७ ॥
सम्मानयन् भूतजातमात्मानमनुचिन्तयेत्।
ब्रह्मविष्णुशिवादीनां भोगे रागश्च हीयते ॥ २८ ॥
तेषां स्वसाम्यदृष्ट्याऽतः साम्यं योगी विचिन्तयेत्।
उत्पत्तौ प्रलये चैव सर्वावस्थासु सर्वदा ॥ २९ ॥
सर्वेषामेकरूपत्व दृष्टूरागादिकं कुतः।
विष्ण्वादयो महैश्वर्यं भुञ्जना अपि नाऽधिकाः ॥ ३० ॥
मत्तोऽतोऽलं तदैश्वर्यैरविवेकिजनप्रियैः।
गुणकर्मादिभिः किञ्चिन् निरीक्ष्याऽधिकमात्मनः ॥३१॥
तदर्थं यतते लोको नाऽहं पश्यामि मेऽधिकम्।
तथा न्यूनं न पश्यामि यदतिक्रमशङ्कया ॥ ३२ ॥

देवा दैत्यजयायेव यतिष्ये तज्जयाशया ।
अहं यथा तथैवाऽन्ये आब्रह्मा नारका जनाः ॥ ३३ ॥
दृश्यन्ते स्वात्मवत् प्रेम्णा पितृभ्रातृसुतादिवत् ।
क ईश ईशितव्यो वा कः श्रेष्ठः कोऽधमोऽपि वा ॥ ३४ ॥
अभिन्ने भेददृष्ट्या स्यान् मृत्योर्भयमिति श्रुतिः ।
चिद्व्योमस्वेकरूपेषु ईशानीशादिरूपकः ॥ ३५ ॥
रूपभेदो ह्यसन् सर्वः स्फटिके रूपभेदवत् ।
धियां रूपैः पुमानेको बहुरूप इवेयते ॥ ३६ ॥
वृकचर्मादिरूपाद्यैर्मायीव बहुरूपधृक् ।
मामालिङ्ग्य निराकारं विविधाकारधारिणी ॥ ३७ ॥
मायैवैका हि नृत्यन्ती मोहयत्यखिला धियः ।
पुंसां भेदो बुद्धिभेदादम्बुभेदाद् यथा रवेः ॥ ३८ ॥
व्योम्नश्च छिद्ररूपेण भेदः कुम्भादिभेदतः ।
अतः शुद्धो बुद्धमुक्तः सर्वदा सर्वगोऽव्ययः ॥ ३९ ॥
अहमन्ये च तत्राऽहो शत्रुमित्रादिधीर्मृषा ।
ब्रह्मणीशे हराविन्द्रे सर्वभूतगणे तथा ॥ ४० ॥
उत्तमाधममध्यत्वविभागो मायया मृषा ।
त्रिगुणात्मकमायायास्त्रैविध्यादात्मनोऽपि हि ॥ ४१ ॥
उत्तमाधममध्यत्वत्रैविध्यं नैव हि स्वतः ।
यथा देहे तथाऽन्यत्र चित्प्रकाशोऽयमव्ययः ॥ ४२ ॥
व्यक्तताव्यक्ततामात्रभेदो ह्यन्तरबाह्ययोः ।
एवमन्येऽपि पुरुषा बद्धमुक्ताविशेषतः ॥ ४३ ॥

ईशानीशाविशेषाच् च पुरुषार्थो न मेऽस्त्यतः।
महानिद्रैव मे साध्वी दुःखभोगहरा प्रिया॥ ४४॥
अप्रिया मूढचित्तानामसाध्वी धीहतात्मनाम्।
चिदादर्शे मयि धियो यद्यपि प्रतिबिम्बनम्॥ ४५॥
तत्त्वतो नैव दोषाय तथाऽपि त्याज्यमेव तत्।
स्वभावादस्य हेयत्वं स्वानुभूत्या हि सिध्यति॥ ४६॥
यथा कोऽपि परस्याऽपि वैरूप्यं न दिदृक्षति।
स्वामिन्यारोप्याऽऽत्मदोषान् साध्वीयमनुतप्यते॥ ४७॥
निर्दोषं स्वामिनं दृष्ट्वा निर्दोषा स्यात् पतिव्रता।
एवमस्या रूपभेदेऽप्येकरूपोऽस्मि सर्वदा॥ ४८॥
भुञ्जानो वाऽप्यभुञ्जानस्तां मदर्थामनन्यगाम्।
यथैकरूपतोपाधियोगायोगदशास्वहो॥ ४९॥
आदर्शस्याऽमलस्यैव चिन्नभोदर्पणस्य मे।
दृश्यबुद्धिगता दोषाः साक्षात् तद्द्रष्टरि प्रभौ॥ ५०॥
न सन्ति मयि मोहाद्या भास्करे भास्यदोषवत्।
दुःखैर्बद्धा स्वमात्मानं त्यक्त्वा मद्भावमागता॥ ५१॥
मुच्यते दुःखबन्धाद् धीर्न मे मोक्षो न बन्धनम्।
कूटस्थासङ्गचिद्रूपोऽस्मि धीदुःखप्रतिबिम्बनम्॥ ५२॥
योऽन्यो बन्धो भोगरूपः सोऽपि चिद्दर्पणे मृषा।
जाग्रदादित्रयावस्थासाक्षी ताभिर्विवर्जितः॥ ५३॥
अहं पूर्णश्चिदादित्य उदयास्तविवर्जितः।
दर्पणे मुखवद् विश्वं मयि बोधे न तात्त्विकम्॥ ५४॥

विभुत्वेऽपि च बाह्यान्तः सुषुप्त्यादावदर्शनात् ।
मयि वाऽन्यत्र वा पुंसि केवलानुभवे विभौ ॥ ५५ ॥
भाति यत् तद्विवर्त्तो धीप्रतिबिम्बात्मकत्वतः ।
शुक्तौ रजतवद् विश्वमतो मयि न दोषकृत् ॥ ५६ ॥
मरीचौ तोयवत् तद्वद् व्योमादौ नगरादिवत् ।
कालत्रयेऽपि नाऽस्त्येव मयि विश्वं सनातने ॥ ५७ ॥
अन्यत्राऽस्त्वथवा माऽस्तु बुद्ध्यादौ मम तेन किम् ।
मयि सर्वं यथा व्योम्नि सर्वत्राऽहं यथा नभः ॥ ५८ ॥
न सर्वं मयि सर्वत्र नाऽहं चालेपतः खवत् ।
अत एवाऽविभागाख्याभेदेन क्षीरनीरवत् ॥ ५९ ॥
ज्ञानात्मकमिदं विश्वं गायन्ति परमर्षयः ।
जगन् मम मदर्थत्वान् मच्छरीरसुखादिवत् ॥ ६० ॥
यथा मम तथाऽन्येषां ममैवेति धियो भ्रमः ।
वस्तुतस्तु न कस्याऽपि किमपि व्यभिचारतः ॥ ६१ ॥
स्वामित्वस्याऽध्रुवत्वेन पान्थस्याऽऽवासगेहवत् ।
एकं चिन्मात्रमस्तीह शुद्धं शून्यं निरञ्जनम् ॥ ६२ ॥
सूक्ष्मात् सूक्ष्मतरं तत्र न जगन् न जगत्क्रिया ।
दृश्यते सर्वदृश्याढ्या स्वस्वबुद्धिपरम्परा ॥ ६३ ॥
चिन्मण्डलमहादर्शे प्रतिबिम्बमुपागता ।
क्वचिद् व्यक्तं क्वचित् सूक्ष्मं नभः सर्वत्र तिष्ठति ॥ ६४ ॥
यथा तथा चिदाकाशं धीदेशेऽन्यत्र च स्थितम् ।
चिदाकाशमयं विश्वं यतोऽतो धीरितस्ततः ॥ ६५ ॥

भ्रमन्तो तत्र तत्रैव भासतेऽर्के घटादिवत् ।
धर्माधर्मौ जन्ममृत्यू सुखदुःखादि चाऽखिलम् ॥ ६६ ॥
जाग्रत्यपि मृषा स्वप्न इव जन्मादिकं मम ।
दृश्ययोगवियोगाभ्यां चितो जन्मविनाशधीः ॥ ६७ ॥
अभिव्यक्त्यनभिव्यक्तिदोषाभ्यां शशिनो यथा ।
महासुषुप्तौ भवजन्ममृत्यु-
दुःस्वप्नधाराः क्षणभङ्गुरा धियः ।
पश्याम्यहं ताभिरलिप्तरूपो
घनैरुपेतैर्विगतै रवेः किम् ॥ ६८ ॥
इत्येवं सततं ध्यायन्नेकाग्रमनसा सुधीः ।
साक्षात्करोत्यात्मतत्त्वं वागगोचररूपतः ॥ ६९ ॥
स्वरूपं निर्मलं शान्तं मनस्त्यजति चेत् क्षणम् ।
तदैव दृश्यसंस्कारशेषात् सङ्क्षुभ्यतीन्द्रियम् ॥ ७० ॥
उत्थितानुत्थितांस्तत्र इन्द्रियारीन् पुनः पुनः ।
विवेकेनैव वज्रेण हन्यादिन्द्रो गिरीनिव ॥ ७१ ॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे राजयोगप्रकार-परिच्छेदः ॥ * ॥

---

अथ सप्तमः परिच्छेदः ।

एवमात्मानुभविनो जीवन्मुक्तस्य लक्षणम् ।
स्पष्टं वक्ष्ये भवेद् येन ज्ञानाज्ञानपरीक्षणम् ॥ १ ॥
श्रवणान् मननाद् वाऽऽपि अन्यथाऽऽत्मज्ञताभ्रमात् ।
कुर्याद् गुरुमविद्वांसं स्याच् चाऽज्ञो ज्ञाभिमान्यपि ॥ २ ॥
नैश्वर्यानागतज्ञत्वादिकं ज्ञानस्य लक्षणम् ।
तद्दतेऽपि हि कैवल्यं योगभाष्यकृतेरितम् ॥ ३ ॥
श्रौतस्मार्तानि वाक्यानि ज्ञानिनो मोक्षभागिनः ।
लक्षकाण्येव लिख्यन्ते विश्वासातिशयाय वै ॥ ४ ॥
यत्र सर्वाणि भूतानि आत्मैवाऽभूद् विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ५ ॥
यः सर्वत्राऽनभिस्नेहस्तत् तत् प्राप्य शुभाशुभम् ।
नाऽभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६ ॥
न विस्मरति सर्वत्र यथा सततगो गतिम् ।
न विस्मरति निश्चैत्यं चिन्मात्रं प्राज्ञधीस्तथा ॥ ७ ॥
नोदेति नाऽस्तमायाति सुखे दुःखे मुखप्रभा ।
यथापूर्वस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥ ८ ॥
यो जागर्त्ति सुषुप्तस्थो यस्य जाग्रन् न विद्यते ।
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥ ९ ॥
रागद्वेषभयादीनामनुरूपं चरन्नपि ।
योऽन्तर्व्योमवदत्यच्छः स जीवन्मुक्त उच्यते ॥ १० ॥
यस्य नाऽहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।

कुर्वतोऽकुर्वतो वाऽपि स जीवन्मुक्त उच्यते॥ ११॥
अपि शीतरुचावर्के अत्युष्णेऽपीन्दुमण्डले।
अप्यधःप्रसवत्यग्नौ जीवन्मुक्तो न चाऽन्यधीः॥ १२॥
चिदात्मन इमा नित्यमस्फुरन्तीह शक्तयः।
इत्यस्याऽऽश्चर्यजालेषु नाऽभ्युदेति कुतूहलम्॥ १३॥
परव्यसनिनी नारी व्यग्राऽपि गृहकर्मणि।
तदेवाऽऽस्वादयत्यन्तर्नरसङ्गरसायनम्॥ १४॥
एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः।
तदेवाऽऽस्वादयत्यन्तर्बहिर्व्यवहरन्नपि॥ १५॥
यो नित्यमध्यात्ममयो नित्यमन्तर्मुखः सुखी।
गम्भीरश्च प्रसन्नश्च गिराविव महाह्रदः॥ १६॥
परानन्दरसास्तुब्धो रमते स्वात्मनाऽऽत्मनि।
सर्वकर्मपरित्यागी नित्यहृष्टो निरामयः॥ १७॥
न पुण्येन न पापेन नेतरेणाऽपि लिप्यते।
येन केन चिदाच्छन्नो येन केन चिदाशितः॥ १८॥
यत्र क्वचन शायी च स सम्राडिव राजते।
वर्णधर्माश्रमाचारशास्त्रमन्त्रनयेप्सितः। १९॥
निर्गच्छति जगज्जालात् पञ्जरादिव केसरी।
वाचामतीतविषमो विषयाशादशोज्झितः॥ २०॥
कामप्युपगतः शोभां शरदीव नभस्तलम्।
निःस्तोत्रो निर्नमस्कारः पूज्यपूजाविवर्जितः॥ २१॥
संयुक्तो वा वियुक्तो वा सदाचारनयक्रमैः।

एतावदेव खलु लिङ्गमलिङ्गमूर्त्तेः
संशान्तसंसृतिचिरभ्रमनिर्वृतस्य ।
तत्त्वस्य यन्मदनकोपविषादलोभ-
मोहापदामनुदिनं निपुणं तनुत्वम् ॥ २२ ॥
तुर्यविश्रान्तियुक्तस्य प्रतितीर्णस्य भवार्णवात् ।
न कृतेनाऽकृतेनाऽर्थो न श्रुतिस्मृतिविभ्रमैः ॥ २३ ॥
तनुं त्यजतु वा तीर्थे श्वपचस्य गृहेऽथवा ।
ज्ञानसम्प्राप्तिसमये मुक्त एवाऽमलाशयः ॥ २४ ॥
न मोक्षो नभसः पृष्ठे न पाताले न भूतले ।
सर्वाशासङ्क्षये चेतःक्षयो मोक्ष इति श्रुतेः ॥ २५ ॥
जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ २६ ॥
अनाम्नाखिलशैलादिप्रतिबिम्बे हि यादृशी ।
स्याद् दर्पणे दर्पणता केवलात्मस्वरूपिणी ॥ २७ ॥
अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसम्भ्रमे ।
स्यात् तादृशी केवलता स्थिते द्रष्टर्यवीक्षणे ॥ २८ ॥
चिन्मात्रं चेत्यरहितमनन्तमजरं शिवम् ।
अनादिमध्यनिलयं यदनाधि निरामयम् ॥ २९ ॥
न शून्यं नाऽपि चाऽऽकारं न दृश्यं न च दर्शनम् ।
अनाख्यमनभिव्यक्तं तत् किञ्चिदवशिष्यते ॥ ३० ॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे जीवन्मुक्तिपरममुक्त्योः परिच्छेदः ॥ * ॥

इति साङ्ख्यसारस्योत्तरभागः । साङ्ख्यसाराख्यं प्रकरणं समाप्तम् ।